॥ नवग्रहपीडाहरस्तोत्रम् ॥

ग्रहाणामादिरादित्यो लोकरक्षणकारकः ।
विषमस्थानसंभूतां पीडां हरतु मे रविः ॥ १॥

रोहिणीशः सुधामूर्तिः सुधागात्रः सुधाशनः ।
विषमस्थानसंभूतां पीडां हरतु मे विधुः ॥ २॥

भूमिपुत्रो महातेजा जगतां भयकृत् सदा ।
वृष्टिकृद्वृष्टिहर्ता च पीडां हरतु मे कुजः ॥ ३॥

उत्पातरूपो जगतां चन्द्रपुत्रो महाद्युतिः ।
सूर्यप्रियकरो विद्वान् पीडां हरतु मे बुधः ॥ ४॥

देवमन्त्री विशालाक्षः सदा लोकहिते रतः ।
अनेकशिष्यसम्पूर्णः पीडां हरतु मे गुरुः ॥ ५॥

दैत्यमन्त्री गुरुस्तेषां प्राणदश्च महामतिः ।
प्रभुस्ताराग्रहाणां च पीडां हरतु मे भृगुः ॥ ६॥

सूर्यपुत्रो दीर्घदेहो विशालाक्षः शिवप्रियः ।
मन्दचारः प्रसन्नात्मा पीडां हरतु मे शनिः ॥ ७॥

महाशिरा महावक्त्रो दीर्घदंष्ट्रो महाबलः ।
अतनुश्चोर्ध्वकेशश्च पीडां हरतु मे शिखी ॥ ८॥

अनेकरूपवर्णैश्च शतशोऽथ सहस्रशः ।
उत्पातरूपो जगतां पीडां हरतु मे तमः ॥ ९॥

॥ इति ब्रह्माण्डपुराणोक्तं नवग्रहपीडाहरस्तोत्रं सम्पूर्णम् ॥

नवग्रहपीडाहरस्तोत्रम् २

सिन्दूरारुण रक्ताङ्गः कर्णान्तायत लोचनः ।
सहस्रकिरणः श्रीमान् सप्ताश्वकृतवाहनः ॥ १॥

गभस्तिमाली भगवान्शिवपूजापरायणः ।
करोतु मे महाशान्तिं ग्रहपीडां व्यपोहतु ॥ २॥

जगदाप्यायनकरो ह्यमृताधारशीतलः ।
सोमः सौम्येन भावेन ग्रहपीडां व्यपोहतु ॥ ३॥

पद्मरागनिभा नेना देहेनापिङ्गललोचनः ।
( var पद्मरागनिभाङ्गेन करिपिङ्गललोचनः)
अङ्गारकः शिवेभक्तो रुद्रार्चन परायणः ॥ ४॥

रुद्रसद्भावसम्पन्नो रुद्रध्यानैकमनसः
ग्रहपीडा भयं सर्वं विनाशयतु मे सदा ॥ ५॥

कुंङ्कुमच्छविदेहेन चारुद्युत्करतः सदा ।
शिवभक्तो बुधः श्रीमान् ग्रहपीडां व्यपोहतु ॥ ६॥

धातु चामीकरच्छायः सर्वज्ञानकृतालयः ।
( var तप्त चामीकरच्छायः)
बृहस्पतिः सदाकालमीशानार्चनतत्परः ॥ ७॥

सोऽपि मे शान्तचित्तेन परमेण समाहितः ।
ग्रहपीडां विनिर्जित्य करोतु विजयं सदा ॥ ८॥

हिमकुन्देन्दुतुल्याभः सुरदैत्येन्द्रपूजितः ।
शुक्रः शिवार्चनरतो ग्रहपीडां व्यपोहतु ॥ ९॥

भिन्नाञ्जनचयच्छायः सरक्तनयनद्युतिः ।
शनैश्चरः शिवेभक्तो ग्रहपीडां व्यपोहतु ॥ १०॥

नीलाञ्जननिभः श्रीमान् सैहिकेयो महाबलः ।
शिवपूजापरो राहुग्रहपीडा व्यपोहतु ॥ ११॥

धूम्राकारो ग्रहः केतुरैशान्यां दिशि संस्थितः ।
वर्तुलोऽतीव विस्तीर्णलोचनैश्च विभीषणः ॥ १२॥

पलाशधूम्रसङ्काशो ग्रहपीडाऽपकारकः ।
घोरदंष्ट्राकरालश्च करोतु विजयं मम ॥ १३॥

खड्गखेटकहस्तश्च वरेण्यो वरदः शुभः ।
शिवभक्तश्चाऽग्रजन्मा ग्रहपीडां व्यपोहतु ॥ १४॥

एते ग्रहा महात्मानो महेशार्चनभाविताः ।
शान्तिं कुर्वन्तु मे हृष्टाः सदाकालं हितैषिणः ॥ १५॥

॥ इति नवग्रहपीडाहरस्तोत्रं (२) सम्पूर्णम् ॥